पाणिनीयं सूत्रं कथं पठनीयम्

यण्–सन्धिं बहवः जानन्ति | यथा यदि + अपि → [इ → य्] → यद्यपि | अत्र इकारस्य स्थाने यकारादेशो भवति | "इकारस्य स्थाने यकारः" इति व्याकरणलोके एकं **कार्यम्** इति उच्यते | व्याकरणे कार्याणि एतादृशानि भवन्ति—

आदेशः = पूर्वं स्थितस्य वर्णस्य स्थाने अन्यवर्णस्य उदयः | यदि + अपि → [इ → य्] → यद्यपि |
आगमः = वर्णात् पूर्वं परं वा अन्यवर्णस्य उदयः | पठन् + आगच्छति → न्–आगमः → पठन्नागच्छति |
लोपः = वर्णस्य अदर्शनम् | बालकः + इच्छति → ः–लोपः → बालक इच्छति |

कस्यचित् अपि कार्यस्य निर्देशार्थं, विधानार्थं, सूत्रं भवति | यण्–सन्धिः एकं कार्यम्; अतः तस्य विधानार्थं सूत्रम् अस्ति | सूत्रस्य व्याख्यां प्रायः अधुना अवगन्तुं न शक्नुमः, किन्तु कथं दृश्यते इति एकवारं पश्येम | यण्–सन्धेः विधिसूत्रम् इदम्—

**इको यणचि** (६.१.७६) = इकः स्थाने यण्–आदेशः भवति अचि परे संहितायां विषये | इकः यण् स्यात् असवर्णे अचि परे इति सूत्रस्य फलितः अर्थः इति ज्ञेयम् | इकः षष्ठ्यन्तं, यण् प्रथमान्तम्, अचि सप्तम्यन्तं, त्रिपदमिदं सूत्रम् | **संहितायाम्** (६.१.७१) इत्यस्य अधिकारः | अनुवृत्ति–सहितसूत्रम्— **इकः यण् अचि संहितायाम्** |

उपरितने सूत्रे इक्, यण्, अच् इति त्रयः प्रत्याहाराः सन्ति | प्रत्याहारः नाम वर्णानां समूहः | एषु त्रिषु प्रत्याहारेषु के के वर्णाः अन्तर्भूताः इति ज्ञातुम् अत्र पश्यतु |

**इको यणचि** (६.१.७६) इति सूत्रं यथा, तथा पाणिनेः **अष्टाध्यायी** इति ग्रन्थे बहूनि सूत्राणि सन्ति | तानि सूत्राणि कार्यं निर्दिशन्ति, highly codified language इत्यस्य माध्यमेन | Codified किमर्थम् इति चेत्, येन प्रत्येकं सूत्रं **लघु** स्यात्, अपि च येन ग्रन्थे आहत्य सूत्राणां सङ्ख्या न्यूनातिन्यूनं स्यात् | तर्हि सङ्क्षेपार्थं code निर्मितं पाणिनिना; code इत्यस्य माध्यमं किम् ? विभक्तिः | इयं विभक्ति–पद्धतिः का इति अग्रे पश्येम |

## 1. पाणिनेः सूत्राणां पद्धतिः

पाणिनेः प्रमुखलक्ष्यम् अस्ति पदव्युत्पत्तिः | पदानि कथं निष्पन्नानि इति प्रदर्शनार्थं सूत्राणि विरचितानि | अतः आधिक्येन सूत्रेषु विशिष्टकार्याणि विहितानि भवन्ति— अमुकवर्णस्य स्थाने अन्यवर्णः, अमुकवर्णः लुप्तः, अमुकवर्णः आगतः इत्यादीनि कार्याणि भवन्ति | एषां कार्याणां सङ्केतार्थं **विभक्तयः** प्रयुक्ताः सन्ति | तदर्थं लोकस्य अपेक्षया, सूत्रेषु विभक्तीनाम् अर्थाः किञ्चित् भिन्नाः सन्ति | पाणिनीयसूत्रेषु विभक्ति–अर्थाः के इति अधः सूचिताः |

षष्ठीविभक्तिः = स्थाने
प्रथमाविभक्तिः = आदेशः, आगमः, नामकरणम्
सप्तमीविभक्तिः = पूर्वकार्यम्
पञ्चमीविभक्तिः = परकार्यम्

तृतीयाविभक्तिः = संयोजनम्

**a**. **षष्ठीविभक्तिः** = **स्थाने** | सूत्रे यस्य वर्णस्य/प्रत्याहारस्य षष्ठीविभक्तिः भवति, सः "स्थानी" भवति— इत्युक्तौ तस्य स्थाने अन्यः वर्णः आयाति | कः वर्णः आयाति तस्य स्थाने ? तस्मिन् एव सूत्रे यः वर्णः/प्रत्याहारः प्रथमाविभक्त्यन्तः, सः | उदाहरणार्थम्—
**इको यणचि** (६.१.७६) = इकः स्थाने यण्–आदेशः भवति | इकः षष्ठ्यन्तं, यण् प्रथमान्तम् | **इकः यण् अचि संहितायाम्** |

**b**. **प्रथमाविभक्तिः** = **आदेशः**, **आगमः**, **नामकरणम्** | सूत्रे यस्य वर्णस्य प्रथमाविभक्तिः भवति, सः आयाति षष्ठीविभक्त्यन्तस्य वर्णस्य स्थाने | तत्र प्रथमाविभक्त्यन्तस्य वर्णस्य नाम "आदेशः" | सूत्रे तादृशः षष्ठीविभक्त्यन्तः वर्णो नास्ति चेत्, तर्हि सः प्रथमाविभक्त्यन्तः वर्णः आयाति किन्तु अपरस्य वर्णस्य स्थाने इति न, अतः तस्य नाम "आगमः" | अन्यत्र प्रथमाविभक्तिः नामकरणस्य सूचिका |

आदेशः
**इको यणचि** (६.१.७६) = इकः स्थाने यण्–आदेशः भवति | इकः षष्ठ्यन्तं, यण् प्रथमान्तम् | **इकः यण् अचि संहितायाम्** |

आगमः
**लुङ्लङ्लृङ्क्ष्वडुदात्तः** (६.४.७१) = लुङ् लङ् लृङ् च परे चेत्, धातुरूपि–अङ्गस्य अट्–आगमो भवति | लुङ्लङ्लृङ्क्षु सप्तम्यन्तम्, अट् प्रथमान्तम्, उदात्तः प्रथमान्तम् | **अङ्गस्य अट् उदात्तः लुङ्लङ्लृङ्क्षु** |

अ + पठ् + त् → अपठत्

नामकरणम्
**सुप्तिङन्तं पदम्** (१.४.१४) = सुबन्तं च तिङन्तं च पदसञ्ज्ञकौ भवतः, इत्युक्ते सुबन्तानां तिङन्तानां च पदसंज्ञा भवति | सुप्तिङन्तं प्रथमान्तं, पदम् प्रथमान्तम् |

राम + सु → रामः | 'रामः' इत्यस्य अन्ते सु इति सुप्–प्रत्ययः अस्ति; सुप् अन्ते यस्य सः सुबन्तं; सुबन्तम् अतः अनेन सूत्रेण तस्य पद–संज्ञा भवति |

वद् + अ + ति → वदति | 'वदति' इत्यस्य अन्ते ति इति तिङ्–प्रत्ययः अस्ति; तिङ् अन्ते यस्य सः तिङन्तं; तिङन्तम् अतः अनेन सूत्रेण तस्य पद–संज्ञा भवति |

**c**. **सप्तमीविभक्तिः** = **पूर्वकार्यम्** | सूत्रे यस्य वर्णस्य सप्तमीविभक्तिः भवति, सः निर्दिष्टात् कार्यात् परं स्थितः इत्यर्थः | नाम निर्दिष्टं कार्यं तस्मात् पूर्वम् अस्ति |

**इको यणचि** (६.१.७६) = इकः स्थाने यण्–आदेशः भवति अचि परे | इकः षष्ठ्यन्तं, यण् प्रथमान्तं, अचि सप्तम्यन्तम् | **इकः**

**यण् अचि संहितायाम्** |

**d. पञ्चमीविभक्तिः = परकार्यम्** | सूत्रे यस्य वर्णस्य पञ्चमीविभक्तिः भवति, सः निर्दिष्टात् कार्यात् पूर्वं स्थितः इत्यर्थः | नाम निर्दिष्टं कार्यं तस्मात् परम् अस्ति |

**रषाभ्यां नो णः समानपदे** (८.४.१) = रेफषकाराभ्यामुत्तरस्य नकारस्य णकारादेशो भवति, समानपदस्थौ चेदेव निमित्तनिमित्तिनौ भवतः | रषाभ्यां पञ्चम्यन्तं, नः षष्ठ्यन्तं, णः प्रथमान्तम् |

वर्ण | पूर्ण | रामेण | पुष्पाणि |

**e. तृतीयाविभक्तिः = संयोजनम्** | सूत्रे यस्य वर्णस्य तृतीयाविभक्तिः भवति, सः निर्दिष्टेन वर्णेन सह संयुक्तः इत्यर्थः | तत्र निर्दिष्टं कार्यं तस्मात् पूर्वम् अपि परम् अपि अर्हति, परन्तु अयं तृतीयाविभक्त्यन्तः वर्णः निर्दिष्टेन कार्येण संयुक्तः भवेत् |

**स्तोः श्चुना श्चुः** (८.४.४०) = सकारस्य तवर्गस्य च स्थाने शकारस्य चवर्गस्य च आदेशः भवति, शकारस्य चवर्गस्य च योजनेन | स्तोः षष्ठ्यन्तं, श्चुना तृतीयान्तं, श्चुः प्रथमान्तम् | **स्तोः श्चुना श्चुः संहितायाम्** |

अन्यत् + च → अन्यच्च

2. <u>व्याख्यानस्य आकृतिः</u>

यदा सूत्रस्य विवरणं दीयते अस्माकं 'संस्कृतव्याकरणम्' इति जालस्थाने, तदा व्याख्याने कश्चन क्रमो वर्तते | स च क्रमः सदा समानो भवति—

१. <u>सूत्रस्य अर्थः</u> = एकस्मिन् वाक्ये वाक्यद्वये वा सूत्रस्य अर्थः कः इति उक्तम् |
२. <u>समासानां विग्रहवाक्यम्</u> = बहुषु सूत्रेषु समासाः सन्ति | सन्ति चेत्, तेषां विवरणं दीयते |
३. <u>सूत्रे पदानां विभक्तयः</u> = सूत्रे प्रत्येकं पदस्य विभक्तिः का इति उच्यते |
४. <u>सूत्रे अनुवृत्तिः</u> = आधिक्येन कानिचन पदानि पूर्वतनसूत्रेभ्यः अपेक्षितानि सूत्रार्थस्य पूरणार्थम् | पाणिनिः सूत्रस्य लघुत्वम् इच्छति | तदर्थं येषां सूत्राणां समानप्रकारक-कार्यं भवति, तानि सूत्राणि अष्टाध्याय्याम् एकस्मिन् स्थले सङ्गृहीतानि भवन्ति | अनेन, एकस्मिन् स्थले (इत्युक्ते एकस्मिन् प्रकरणे) प्रथमे सूत्रे किञ्चन पदम् अस्ति, तत् पदं पुनः द्वितीये सूत्रे न दीयते | अस्माभिः मनसि तत् पदम् आनेतव्यम् | यथा रामः वदति "अहम् आपणं गच्छामि" | श्यामः वदति "अहम् अपि" | वयं द्वयोः सम्भाषणं श्रुत्वा अवगच्छामः यत् श्यामस्य आशयः "अहम् अपि आपणं गच्छामि" इति | यद्यपि श्यामः केवलम् "अहम् अपि" इत्यवदत्, तथापि वयं तस्य अर्थं पूरयामः मनसि | तादृशम् अर्थपूरणं पाणिनिः इच्छति सूत्रविषये | यानि पदानि न उक्तानि यतः पूर्वतनसूत्रेषु दत्तानि, तानि अस्माभिः आनेतव्यानि | तादृशपदस्य 'अनुवृत्तिः' अस्ति इत्युच्यते | व्याख्यानस्य अस्मिन् भागे इमानि पदानि दीयन्ते |
५. <u>सूत्रे अधिकारः</u> = केषाञ्चित् विशिष्ट-सूत्राणां पूर्णरीत्या 'अनुवृत्तिः' भवति बहुषु अग्रिमसूत्रेषु | अधिकारसूत्रे यावन्ति पदानि सन्ति, तानि सर्वाणि मिलित्वा अपरेषु सूत्रेषु अर्थपूरणार्थम् उपविशन्ति | अर्थस्य पूरणार्थं किञ्चन अधिकारसूत्रम् अपेक्ष्यते चेत्, अत्र दीयते |

६. <u>अनुवृत्ति–सहित–सूत्रम्</u> = सूत्रं वाक्यरूपेण दीयते | याः अनुवृत्तयः सन्ति, अपि च यानि अधिकारसूत्राणि सन्ति, तानि सूत्रे अन्तर्गतं कृत्वा वाक्यरीत्या सूत्रं लिक्यते |

3. <u>उदाहरणम्— यण् सन्धिः</u>

यदि + अपि → [इ → य्] → यद्यपि |

**इको यणचि** (६.१.७६) = इकः स्थाने यण्–आदेशः भवति अचि परे संहितायां विषये | इकः षष्ठ्यन्तं, यण् प्रथमान्तम्, अचि सप्तम्यन्तं, त्रिपदमिदं सूत्रम् | **संहितायाम्** (६.१.७१) इत्यस्य अधिकारः | अनुवृत्ति–सहितसूत्रम्— **इकः यण् अचि संहितायाम्** |

उपरितने व्याख्याने, क्रमेण सूत्रार्थः अस्ति, समासस्य अभावात् समासविवरणं नास्ति, पदानां विभक्तयः दत्ताः, सूत्रे अनुवृत्तिः नास्ति, अधिकारः अस्ति, अनुवृत्ति–सहित–सूत्रम् अन्ते वर्तते | अत्र अनुवृत्तिः नास्ति, परन्तु अधिकारः अस्ति अतः अस्मिन् वाक्ये अधिकारः अपि अन्तर्गतः |

यदि + अपि → [इ → य्] → यद्यपि | अत्र इकारः इक्–प्रत्याहारे अस्ति; यकारः यण्–प्रत्याहारे अस्ति | सूत्रे इक् षष्ठीविभक्तौ अस्ति अतः तस्य <u>स्थाने</u> कार्यं भवति; यण् प्रथमाविभक्तौ अस्ति अतः सः (यकारः) आदेश–रूपेण इकारस्य स्थाने आयाति; अच् सप्तमीविभक्तौ अस्ति अतः "अपि"–शब्दस्य अकारात् पूर्वं कार्यं भवति | कार्यं किम् ? इ–स्थाने य्–आदेशः |

सूत्रार्थः अवगतः खलु !

4) <u>पाणिनीय–सूत्राणि षड् विधानि</u>

संज्ञा च परिभाषा च विधिर्नियम एव च |
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम् ||

१) संज्ञासूत्रम् = येन नामकरणं क्रियते | **सुप्तिङन्तं पदम्** (१.४.१४)
२) परिभाषासूत्रम् = यत्र नियमः नास्ति, एतादृशं सूत्रम् आगत्य नियमयति | **स्थानेऽन्तरतमः** (१.१.५०)
३) विधिसूत्रम् = येन कार्यं विधीयते | **इको यणचि** (६.१.७६)
४) नियमसूत्रम् = येन पूर्वात् विद्यमानः नियमः सीमितो भवेत् | **रात्सस्य** (८.२.२४)
५) अतिदेशसूत्रम् = येन कस्यचित् शब्दस्वरूपस्य स्वभावः परिवर्तेत | **सार्वधातुकमपित्** (१.२.४) इति सूत्रेण यः ङित् नास्ति, सः ङिद्वत् स्यात् |
६) अधिकारसूत्रम् = यस्य अनुवृत्तिः भवति बहुषु सूत्रेषु | **संहितायाम्** (६.१.७१)

Swarup – June 2012 (Updated October 2015)